# चम्पूरामायणे

# बालकाण्डम्

१५ – १२.०३.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# पुनरावर्तनम्

- अथ भगवान् – देवानां विज्ञापनं श्रुत्वा
- इन्द्रनीलाचलोदञ्चत्... – विष्णुः मन्दहासयुक्तः मधुरम् अभाषत
- भवताम् अपराध... – लोकपीडकोऽसौ रावणः अधुनैव हन्तुं शक्यः
- किन्तु सरसिजासनशासनम्.. – ब्रह्मणः वचनं सत्यापयितुं, दशरथस्य इच्छां पूरयितुं च अहं मानुषरूपेण जातः सन् रावणं हनिष्यामि
- ततः सा परिषद्... – हृष्टाः देवाः क्षीरसमुद्रात् निष्क्रान्ताः

# ततस्तानमरान् प्राह स्म पितामहः ।

- ततः, तान्, अमरान्, प्र-आह, स्म, पितामहः
- ततः = तदनन्तरम्, दुग्धसागरात् निर्गत्य
- तान् अमरान् = देवान्
- पितामहः = ब्रह्मा
- प्राह स्म = प्रोवाच

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# ततस्तानमरान् प्राह स्म पितामहः ।

- तात्पर्य्यम् – वैकुण्ठात् निवर्त्य सृष्टिकर्ता ब्रह्मा तान् देवानुद्दिश्य उवाच ।
- अमरान् – "अमरा निर्जरा देवाः त्रिदशा विबुधाः सुराः" (अमरः)
- प्राह स्म – "ब्रूञ् व्यक्तायां वाचि", लट्, प्रथम.१ । "ब्रुवः पञ्चानामादित आहो ब्रुवः" (३.४.८४) । "लट् स्मे" (३.२.११८), "अपरोक्षे च" (३.२.११९) – स्म-योगे भूत-अनद्यतने परोक्षे अपरोक्षे च लट्-लकारः भवति । लिट्-लङोः अपवादः ।
- पितामहः – "ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Values · Technology

भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति ।

- भवन्तः, तावत्, अवतरिष्यतः, लक्ष्मी-सहायस्य, साहाय्यार्थम्, अप्सरः-प्रभृतिषु, युवतिषु, वानर-अच्छभल्ल-गोपुच्छ-नीलमुख-वेष-भृतः, प्रथितः-प्रभावाः, प्रजाः, प्रजनयेयुः, इति ।
- भवन्तः = यूयं देवाः
- तावत् = इदानीम्

भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति ।

- अवतरिष्यतः = भूलोके जनिष्यतः
- लक्ष्मीसहायस्य = श्रीरमणस्य विष्णोः
- साहाय्यार्थम् = सहयोगं दातुम्
- अप्सरःप्रभृतिषु युवतिषु = मेनकादिषु देवकन्यकासु

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value · Technology

# भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति ।

- वानर... - वानराः = मर्कटाः, अच्छभल्लाः = भल्लुकाः, गोपुच्छाः नीलमुखाः = कपिप्रभेदाः, तद्वेषभृतः = तत्तद्भूमिकाधारिणः
- प्रथितप्रभावाः = विख्यातपराक्रमान्
- प्रजाः = पुत्रान्
- प्रजनयेयुः = उत्पादयेयुः

भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति ।

- तात्पर्य्यम् = "हे देवाः ! भूलोके जनिष्यतः लक्ष्मीपतेः विष्णोः सहयोगार्थं यूयं सर्वे देवकन्यकासु स्व-स्व-अंशयुतान् पराक्रमिणः पुत्रान् मर्कट-भल्लकादिषु रूपेषु उत्पादयत" इति पितामहः देवान् आदिष्टवान् ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Values - Knowledge - Technology

भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति ।

- पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः । उवाच देवताः सर्वाः स्वयम्भूर्भगवानिदम् ॥
- सत्यसन्धस्य वीरस्य सर्वेषां नो हितैषिणः । विष्णोः सहायान् बलिनः सृजध्वं कामरूपिणः ॥
- मायाविदश्च शूरांश्च वायुवेगसमान् जवे । नयज्ञान् बुद्धिसम्पन्नान् विष्णुतुल्यपराक्रमान् ॥

बाल १७.१-३

भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति ।

- असंहार्यानुपायज्ञान् दिव्यसंहननान्वितान् । सर्वास्त्रगुणसम्पन्नान् अमृतप्राशनानिव ॥
- अप्सरस्सु च मुखासु गन्धर्वाणां तनूषु च । यक्षपन्नगकन्यासु ऋक्षविद्याधरीषु च ॥
- किंनरीणां च गात्रेषु वानरीणां तनूषु च । सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान् ॥

बाल १७.४-६

भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति ।

- अवतरिष्यतः – अव+ "तॄ प्लवनतरणयोः" – लृटः शतृ । "लृटः सद्वा" (३.३.१४) । तकारान्तः, पुं, ६.१
- लक्ष्मीसहायस्य – लक्ष्म्याः सहायः, तस्य । सह एति = गच्छति इति सहायः
- साहाय्यार्थम् – सहायस्य भावः । सहाय + ष्यञ् (तद्धितः) । साहाय्याय इदम् । चतुर्थीतत्पुरुषः ।

भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति ।

- वानर.. – वानराश्च अच्छभल्लाश्च, गोपुच्छाश्च नीलमुखाश्च । वानर...नीलमुखानां वेषः । वानर...वेषं बिभ्रति – उपपदसमासः । तकारान्तः, स्त्री, २.३
- प्रथितप्रभावाः – प्रथितः प्रभावः यासां ताः । आकारान्तः, स्त्री, २.३
- प्रजाः – "प्रजा स्यात् सन्ततौ जने" (अमरः) । आकारान्तः, स्त्री, २.३
- प्रजनयेयुः – प्र+ "जनी प्रादुर्भावे" – विधिलिङ्, प्रथम.३

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# पुरैव किल मम जृम्भारम्भे सम्भूतवाञ्जाम्बवानिति ।

- पुरा, एव, किल, मम, जृम्भ-आरम्भे, सम्भूतवान्, जाम्बवान्, इति
- पुरा = पूर्वकाले
- मम = ब्रह्मणः
- जृम्भारम्भे = जृम्भणसमये
- सम्भूतवान् = उत्पन्नः
- जाम्बवान् = तन्नामा भल्लूकाधिपतिः

# पुरैव किल मम जृम्भारम्भे सम्भूतवाञ्जाम्बवानिति ।

- तात्पर्य्यम् = पूर्वमेव मम जृम्भणसमये जाम्बवन्नामा भल्लूकाधिपतिः सृष्टः । (सोऽपि विष्णोः साहाय्यमाचरिष्यति) ।
- पूर्वमेव मया सृष्टो जाम्बवानृक्षपुङ्गवः । जृम्भमाणस्य सहसा मम वक्त्रादजायत ॥ (बाल १७.७)
- जाम्बवान् – जम्बोः वर्णं जाम्बवम्, तदस्य अस्तीति जाम्बवान् । जम्बूफलतुल्यवर्णः इत्यर्थः । तकारान्तः, पुं, १.१ ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# ततस्ते गीर्वाणास्तथाकुर्वन् ।

- ततः, ते, गीर्वाणाः, तथा, अकुर्वन् ।
- ततः = ब्रह्मणः आदेशानन्तरम्
- ते गीर्वाणाः = देवाः
- तथा अकुर्वन् = तदनुगुणम् आचरितवन्तः ।
- ब्रह्मणः वचनानुगुणं देवाः वानरादिवेषेषु पुत्रान् जनयामासुः ।

Vyoma Samskrtam-Value Education-Technology

# अथ वैतानाद्वैश्वानरान्नरः प्राजापत्यः सहेमपात्रः कश्चिदुत्थाय पुत्रीयते दशरथाय पायसममृतप्रायं प्रायच्छत् ।

- अथ, वैतानात्, वैश्वानरात्, नरः, प्राजापत्यः, स-हेम-पात्रः, कश्चित्, उत्थाय, पुत्रीयते, दशरथाय, पायसम्, अमृत-प्रायम्, प्रायच्छत् ।
- अथ = अनन्तरम्
- वैतानात् = यज्ञीयात्
- वैश्वानरात् = अग्नेः

vyoma Sanskritam - Value Education - Technology

# अथ वैतानाद्वैश्वानरान्नरः प्राजापत्यः सहेमपात्रः कश्चिदुत्थाय पुत्रीयते दशरथाय पायसममृतप्रायं प्रायच्छत् ।

- प्राजापत्यः नरः = प्रजापतिना प्रेषितः पुरुषः
- कश्चित्
- सहेमपात्रः = हिरण्मयपात्रसहितः
- उत्थाय = निर्गत्य
- पुत्रीयते = सन्ततिं कामयते

अथ वैतानाद्वैश्वानरान्नरः प्राजापत्यः सहेमपात्रः कश्चिदुत्थाय पुत्रीयते दशरथाय पायसममृतप्रायं प्रायच्छत् ।

- दशरथाय
- पायसम् = परमान्नम्
- अमृतप्रायम् = सुधाकल्पम्
- प्रायच्छत् = दत्तवान्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# अथ वैतानाद्वैश्वानरान्नरः प्राजापत्यः सहेमपात्रः कश्चिदुत्थाय पुत्रीयते दशरथाय पायसममृतप्रायं प्रायच्छत् ।

- तात्पर्य्यम् – ततः यज्ञाग्नेः प्रजापतिना प्रेषितः कश्चित् दिव्यपुरुषः हिरण्मयपात्रसहितः समुत्थाय सुधाकल्पं परमान्नं पुत्रार्थिने दशरथाय दत्तवान् ।
- ततो वै यजमानस्य पावकादतुलप्रभम् । प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥
- दिव्यपायससम्पूर्णां पात्रीं पत्नीमिव प्रियाम् । प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव ॥
- समवेक्ष्याब्रवीद्वाक्यम् इदं दशरथं नृपम् । प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप ॥

बाल १६.११

# अथ वैतानाद्वैश्वानरान्नरः प्राजापत्यः सहेमपात्रः कश्चिदुत्थाय पुत्रीयते दशरथाय पायसममृतप्रायं प्रायच्छत् ।

- वैतानात् – वितानः = यज्ञः, तस्य अयम् । वितान + अण् (तद्धितः) । "क्रतु-विस्तारयोरस्त्री वितानम्" (अमरः)
- वैश्वानरात् – "अग्निर्वैश्वानरो वह्निः वीतिहोत्रो धनञ्जयः" (अमरः)
- प्राजापत्यः – प्रजापतेरयम् । प्रजापति + ण्य (तद्धितः)
- सहेमपात्रः – हेम्नः पात्रम् । हेमपात्रेण सहितः । बहुव्रीहिः । सहस्य सः "वोपसर्जनस्य" ६.३.८१ – सहपुत्रः/सपुत्रः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धम्
प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावम्
स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम् ॥ २३ ॥

- पायसविभागः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धम्
प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावम्
स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम् ॥ २३ ॥

- कौसल्यायै, प्रथमम्, अदिशत्, भूपतिः, पायस-अर्धम्, प्रादात्, अर्धम्, प्रणय-मधुरम्, केकय-इन्द्रस्य, पुत्र्यै, एते, देव्यौ, तरल-मनसः, पत्युः, आलोच्य, भावम्, स्व-अर्ध-अंशाभ्याम्, स्वयम्, अकुरुताम्, पूर्ण-कामाम्, सुमित्राम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धम् प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावम् स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम्

- अदिशत् = प्रायच्छत्
- कः अदिशत्? भूपतिः = राजा दशरथः
- किम् अदिशत्? पायसार्धम् = पायसस्य अर्धभागम्
- कस्मै अदिशत्? कौसल्यायै = राजमहिष्यै
- कदा अदिशत्? प्रथमम् = आदौ

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धम् प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावम् स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम्

- प्रादात् = प्रदत्तवान्
- किं प्रादात्? अर्धम् = पायसस्य अपरम् अर्धभागम्
- कीदृशम् अर्धम्? प्रणयमधुरम् = प्रेम्णा स्वादु
- कस्मै प्रादात्? केकयेन्द्रस्य पुत्र्यै = प्रेमास्पदायै कैकेय्यै

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education · Technology

कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धम् प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावम् स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम्

- अकुरुताम् = कृतवत्यौ
- कौ अकुरुताम्? एते देव्यौ स्वयम् = कौसल्या कैकेयी च स्वयमेव (दशरथेन अकथिते एव)
- किम् अकुरुताम्? सुमित्रां पूर्णकामाम् = सफल-मनोरथाम्
- कथम् अकुरुताम्? स्वार्धांशाभ्याम् = आत्मनोः भागस्य अर्धाभ्याम्

कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धम् प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावम् स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम्

- किमर्थम् अकुरुताम्? आलोच्य = विचिन्त्य
- किम् आलोच्य? भावम् = अभिप्रायम्
- कस्य भावम्? पत्युः = दशरथस्य
- कीदृशस्य पत्युः? तरलमनसः = आकुलचित्तस्य

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धम् प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावम् स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम्

- अन्वयः – भूपतिः प्रथमं कौसल्यायै पायसार्धम् अदिशत् । [ततः] प्रणयमधुरम् अर्धं केकयेन्द्रस्य पुत्र्यै प्रादात् । एते देव्यौ तरलमनसः पत्युः भावम् आलोच्य स्वयं स्वार्धांशाभ्यां सुमित्रां पूर्णकामाम् अकुरुताम् ।
- तात्पर्य्यम् – प्राप्तपायसः दशरथः आदौ राजमहिष्यै कौसल्यायै पायसार्धं दत्त्वा, ततः प्रेमास्पदायै कैकेय्यै प्रीत्या अपरमर्धं दत्तवान् । ततः सुमित्रायै पायसं न शिष्टमिति व्याकुलस्य तस्य मनोभावं विज्ञाय कौसल्या कैकेयी च स्वयम् स्वभागाभ्याम् अर्धमर्धं सुमित्रायै दत्त्वा तस्याः मनोरथं पूरितवत्यौ ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धम् प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावम् स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम्

- कौसल्यायै नरपतिः पायसार्धं ददौ तदा । अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ॥
- कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् । प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ॥
- अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः । एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥

बाल १६.२७-२९

- ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः । चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥

रघु १०.५७

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धम् प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावम् स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम्

- अदिशत् – “दिश अतिसर्जने” – लङ्, प्रथम.१
- प्रादात् – प्र + “डुदाञ् दाने” – लुङ्, प्रथम.१
- तरलमनसः – तरलं मनः यस्य सः, तस्य । सकारान्तः, पुं, ६.१
- अकुरुताम् – “डुकृञ् करणे” – लङ्, प्रथम.२
- पूर्णकामाम् – पूर्णः कामः यस्याः सा, ताम्
- मन्दाक्रान्ता वृत्तम् ।

Vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# सङ्क्षेपः

- भवन्तस्तावत् – विष्णोः साहाय्यार्थं वानरभल्लुकादीन् जनयितुं देवान् प्रति ब्रह्मण आदेशः
- पुरैव किल मम जृम्भारम्भे सम्भूतवान् जाम्बवानिति ।
- अथ वैतानाद् – यज्ञाग्नेः आगतेन पुरुषेण पायसप्रदानम्
- कौसल्यायै - पायसविभागः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in